लक्ष्मणः—यदाज्ञापयत्यार्यः। ( तथा करोति )

राम—एष एषः—

रथचरणायुधस्य चरणेन हतो रभसा-
नभस इव च्युतो नमुचिरस्रकणैः चरितैः।
प्रतिनवबन्धुजीवकुसुमच्छविभिः सविता
शशिमुखि ! दिङ्मुखानि किरणैररुणीकुरुते ॥२१॥

( निष्क्रान्ताः सर्वे )

इति श्रीशक्तिभद्रविरचिते चूडामणिनाटके द्वितीयोऽङ्कः।

---

सम्भाषणस्पर्शनादिजनिताशुद्धिनिरसनसमर्थानां गोदावरीसम्बन्धिनीनामपामवगाहनेन। "कर्तृकर्मणोः कृति" इति कर्मणि षष्ठी। आर्द्रैरङ्गैः सहिताः सन्तः। वयं मरुतोऽन्तर्नियम्य। "ऊरुस्थोत्तानचरणसव्ये न्यस्येतरं करम्। उत्तानं किञ्चिदुन्नम्य मुखं विष्टभ्य चोरसा॥ निमीलिताक्षः सत्त्वस्थो दन्तैर्दन्तानसंस्पृशन्। तालुस्थाचलजिह्वश्च संवृतास्यः सुनिश्चलः॥ संनिरुध्येन्द्रियग्राम नातिनीचोच्छ्रितासनः। द्विगुणं त्रिगुणं वापि प्राणायाममुपक्रमेत्॥" इत्यादिना मुनिभिरुपदिष्टेन मार्गेण चतुर्दशभुवनाभ्यन्तर्भोगे परामुपनीय मन्त्रान् प्रणवव्याहृत्यादीन् परिवर्त्य सावर्तनं जप्त्वा सायन्तनं नियमं सायंकालेऽवश्यकर्तव्यत्वेन विहितं कर्म चरामः अनुतिष्ठाम इति ॥२०॥

अथ राममुखेन कविः सन्ध्यावर्णनमाभिरत्याङ्कं समापयति। एष दिवसः परिणतः अवसितप्राय इत्यर्थः। हे ! शशिमुखि ! सविता प्रतिनवानां बन्धुजीवकुसुमानां छविरिव छविर्येषां तैः अतिरक्तैः किरणैः दिशां मुखानि अरुणीकुरुते। अत्र मुखशब्देन प्रतिष्ठासमानमात्मवल्लभमालोक्य कोपेनारुणीकृतवदना इवेत्युत्प्रेक्षा व्यज्यते। यथा पूर्वं देवासुरसङ्ग्रामे नमुचिर्नामातिवीरोऽसुरः रथचरणायुधस्य चक्रायुधस्य दैत्यारेः रभसात् कोपात् सुदर्शनेन शिरश्छित्वा चरणेन हतः प्रक्षिप्तो रभसाद् वेगात् नभसः च्युतः सन् पतनसमये चरितैः क्षरितैरस्रकणैः दिङ्मुखान्यरुणीचकार तथायमप्यरुणीकुरुते इति। उपमालङ्कारः ॥ २१ ॥

इत्याश्चर्यचूडामणिव्याख्यायां द्वितीयोऽङ्कः।

---

# अथ तृतीयोऽङ्कः ।

( ततः प्रविशति यथानृषिकुमारः )

**ऋषिः**—तिष्ठतु चिराय दिवसकरान्वयो यं विभूषयता रामेण खरदूषणकर्णधारां यातुधानकेतुमतीं जनस्थानतो यमस्थान-

---

आश्चर्यचूडामणिनाटकेऽङ्को द्वितीयोऽपि यथामनीषम् ।
व्याकार्यथो चित्रकथासमेतमङ्कं तृतीयं विवृणोमि शक्त्या ॥

अथ कविना नीरसानुचितखरदूषणादिवधवस्तुजातं सूचयितुं विष्कम्भकः प्रथमं निबध्यते । मुनिकुमारवृद्धतापसाभ्यां मध्यमपात्राभ्यां प्रयोजितस्यास्य विष्कम्भकस्य शुद्धत्वमवधेयम् । तदिदं सर्वं नाट्यवेदविद्भिरभिहितम्—"द्वेधा विभागः कर्तव्यः सर्वस्यापीह वस्तुनः । सूच्यमेव भवेत् किञ्चिद् दृश्यं श्रव्यमथापरम् ॥ नीरसोऽनुचितस्तत्र संसूच्यो वस्तुविस्तरः ॥ दृश्यस्तु मधुरोदात्तरसभावनिरन्तरः । अर्थोपक्षेपकैः सूच्यं पञ्चभिः प्रतिपादयेत् ॥ विष्कम्भचूलिकाङ्कास्याङ्कावतारप्रवेशकैः । वृत्तवर्तिष्यमाणानां कथांशानां निदर्शकः ॥ संक्षेपार्थस्तु विष्कम्भो मध्यपात्रप्रयोजितः । एकानेककृतः शुद्धः सङ्कीर्णो नीचमध्यमैः ॥" इति । अथ कश्चिन्मुनिकुमारोऽभ्यस्तसमस्तविद्यतया परिव्रजन् सन् परिचितसमस्तद्वीपिलिकान्तसंचारी भजमानो विषयनिरपेक्षो भूत्वा तीर्थानि सेवमानो मध्येमार्गं सौमित्रिवचनात् रामेण कृतं खरदूषणयोस्तदधिष्ठितस्य बलस्य च वधमाकर्ण्य पद्धतिपर्यटनपरिश्रान्तोऽप्यानन्दपर्याकुलो भूत्वा रघुवीरं मनसाभिनन्दन् तत्सम्बन्धितया तदुदारस्यैवाशिषमाशास्ते—**तिष्ठत्विति** ॥ अयं दिवाकरान्वय एवमेवोदयमभ्युदयं प्राप्तः चिरकालं निरुपद्रवमत्र तिष्ठतादित्यर्थः । अमुना रामेण कृतं परममुपकारमभिप्रेत्य तदुत्पादितस्यानन्दस्य दिवाकरान्वयस्याप्याशीर्वादः कृतः तमेव व्यक्तीकरोति—**यमिति** ॥ यं दिवाकरान्वयं विभूषयता विशेषेणालङ्कुर्वता । यथा रामेण 'दिवाकरान्वय उज्ज्वलोऽभूत् न तथान्येन केनापि पूर्वेण राज्ञेति भावः । तथाभूतेन रामेण सर्वा एव वनभूमयः न केवलं जनस्थानमेव मद्विधानामपि कौमारे वयसि स्थितानामपि स्वैरसञ्चारक्षमाः कृताः तीर्थयात्राव्यापृतस्य सर्वेष्वेव वनप्रदेशेषु स्वैरसञ्चारलाभात् । वनभूमय इत्यनेन सन्तोषातिशयो व्यज्यते । कथं स्वैरसञ्चारक्षमत्वं वनभूमीनामत आह—**खरेति** ॥ खरदूषणौ कर्णधारौ नाविकौ यस्याः सा । सेनां प्रति नियन्तृत्वात् कर्णधारत्वारोपः । **यातुधानकेतुमतीमिति** ॥

वर्तिनीं कृतवता कृताः खलु माद्विधानामपि स्वैरसञ्चारक्षमा वनभूमयः। साम्प्रतं नूनं रामाश्रयाद् राक्षसजीवितरसज्ञा मृत्युजिह्वा लङ्कामपि लेढि। (किञ्चिद्गत्वा) तत् क नु खलु तीर्थयात्राश्रमं विगमयामि। (परिक्रम्यावलोक्य) अत्रास-न्नेनाश्रमेण भवितव्यम्। तथा हि—

---

केतुशब्दो ध्वजे कूपके च वर्तते। ध्वजेन नित्ययोगात् केतुमतीति सेनायास्संज्ञा। यथाह अमरसिंहः "ध्वजिनी वाहिनी सेना" इति। तथा कूपकेन नित्ययोगात् पोतस्यापि केतुमतीशब्दवाच्यत्वम्। इमर्थे च नित्ययोगे मतुप्प्रत्ययः। "भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने। संसर्गेऽस्तिविवक्षायां भवन्ति मतुबादयः॥" इति। तथा च शब्दश्लेषोऽस्य यातुधानसेनायां पोतत्वारोपनिबन्धनतया रूपकालङ्कारोपेता प्रतिपत्तव्या इति ज्ञेयम्। **जनस्थानतो यमस्थानवर्तिनीं कृतवतेति॥** यदि यातुधानसेना रामेण जनस्थानतोऽपसारिता वनान्तरं लङ्कापुरं वा गता स्यात्, अतः पुनरागमनशङ्कया स्वैरसञ्चारो न लभ्येत। यतः सा यमस्थानवर्तिनी कृता अतः पुनरागमनभयाभावेनाद्यप्रभृति सर्वत्र स्त्रीबालवृद्धानामपि स्वैरसञ्चारो भवतीत्यर्थः। ननु खरदूषणादिभ्यो बलवत्तमेषु दशग्रीवादिषु जीवत्सु कथं स्वैरसञ्चारलाभः अत आह—**साम्प्रतमिति॥** अयमर्थः। सर्वत्राप्रतिहतप्रवेशापि मृत्युजिह्वा एतावन्तं कालं राक्षसजीवितरसोत्सुकापि रावणादिभयादलब्धतत्प्रसरा, तदर्थं कञ्चनाश्रयमपेक्षमाणा साम्प्रतमिदानीं रामाश्रयात् रामाभिधानं लोकोत्तरगुणसम्पन्नमाश्रयं लब्ध्वा। 'ल्यब्लोपे पञ्चमी"। अथवा रामस्याश्रयात् आश्रयणात्। "कर्तृकर्मणोः कृति" इति कर्मणि षष्ठी। **राक्षसजीवितरसज्ञा॥** राक्षसानां जीवितरसमनुभवन्ती। पूर्वं रावणाधिष्ठितत्वेनाचिन्तनीयामपि लङ्कां लेढि यथा स्वाद्यं मध्वाद्यस्वेनास्वादयति एवं विशिष्टाश्रयलाभादरसेन निष्प्रतिबन्धं विनाशयिष्यतीति। अनेन अन्येन कविना सर्वराक्षसवधोत्साहस्य बीजभूतस्य खरदूषणवधेनावान्तरप्रयोजनेन विच्छेदे प्रसक्ते तदविच्छेदाय कविना द्वितीयार्थप्रकृतिर्निबद्धेति ज्ञेयम्। यथाह—"स्वल्पोद्दिष्टस्तु तद्धेतुर्बीजं विस्तार्यनेकधा। अवान्तरार्थविच्छेदे बिन्दुरच्छेदकारणम्॥" इति। अथ तीर्थयात्रापरिसमापनवाय शीघ्रप्रदेशमन्विष्य किञ्चिद्गत्वा सिकतागततपस्विस्वरखादिभिराश्रमासत्तिमनुमाय सन्तुष्टो भूत्वाह—**अत्रेति॥** अत्र नदीतीरे आश्रमेणासन्नेन भवितव्यम्।

दर्भैः सैकतमण्डलानि सरितः श्यामानि मन्त्रास्तृतै-
रभ्यासात् कलमाह शाखिनि शुकी वाक्यानि वैखानसैः ।
ऊधो मातुरपास्य मां प्रति जटाचीराजिनप्रत्ययात्
नीवाराञ्जलिभिर्भृता मुनिसुतैरायान्ति बाला मृगाः ॥ १ ॥

अत्र न शृणोमि स्वाध्यायम् । (ध्यायन्) न पश्यामि होमधूमम् । भवतु, प्रविश्य ज्ञास्ये । (प्रविश्यावलोक्य) इदमाश्रमपदमचिरोत्सन्नमिव दृश्यते । तथा हि—

---

कुत इत्यत आह—दर्भैरिति ॥ सरितः सैकतमण्डलानि नद्याः सिकतामयानां प्रदेशानां समूहाः मन्त्रास्तृतैः मन्त्रपाठपूर्वं मन्त्रपूर्वकमास्तृतैः दर्भैः श्यामानि । अनेन महर्षीणां यज्ञयागानुष्ठानतात्पर्यं दर्शितम् । चिह्नान्तरमाह—शाखिनि महीरुहे स्थिता शुकी, वैखानसैस्तृतीयाश्रमस्थैः मुनिभिस्सहाभ्यासात् नित्यमेवाश्रुतस्वरवर्णपदक्रमादिविशिष्टाध्यापनाध्ययनश्रवणपूर्वकाभ्यासजनितादवधारणाद्धेतोः स्वयमेव वाक्यानि कलमाह उच्चारयति । कलशब्देन मुनीनामुच्चारणात् शुकीसमुच्चारणस्य स्वरवर्णाद्युपेतेन विशिष्टस्यैव सतो नादमाधुर्यमाधिक्यं दर्शितम् । अनेन विद्याभ्यासजनितविज्ञानाधिक्यमावेदितम् । अथापरेण लिङ्गेनाश्रमासत्तिमनुमिनोति । बाला मृगाः अत्यन्तबालत्वेन स्वयं तृणादिभक्षणासमर्था हरिणादयो मातुरूधोऽपास्य स्तन्यपानसमय एव मुनिकुमारकृतोपलालनातिशयसमुद्भूतेन प्रेम्णा सवत्क्षीरमप्यूधोभारमुत्सृज्य जटाचीराजिनप्रत्ययात् जटाचीराजिनैः कृतात् विश्वासात् मदङ्गस्थजटाचीराजिनादिदर्शनेनापरिचितचरेऽपि मयि परिचितचरमुनिकुमारबुद्ध्या सञ्जातात् विश्वासादित्यर्थः । सञ्जातोत्सुक्या भूत्वा मां प्रत्यायान्ति । अत्र हेतुः—मुनिसुतैर्नीवाराञ्जलिभिर्भृता इति ॥ अनेन वाक्येन कुमाराणामपि दयालुत्वं दर्शयतान्येषां दयालुत्वातिशयो दर्शितः ॥ १ ॥

एवं बहिरङ्गभूतैः चिह्नैराश्रमासत्तिमनुमाय तदनन्तरमन्तरङ्गभूतस्वाध्यायाध्ययनहोमधूमाद्यनुपलम्भेन डोलायमानमानसो भूत्वाह—अत्रेति ॥ भवतुशब्दः करिष्यमाणकर्माध्यवसाये । यथाह—"भवतान्तरनिर्णये" इति । अथ प्रविश्यावलोक्य मुनीनामदर्शनेन तत्कालसूचककर्मानुष्ठानचिह्नभूतद्रुवगन्धाद्युपलम्भेन च मुनिभिस्तत्कालकृतमाश्रमाणां परित्यागमनुमिनोति—इदमिति ॥ अचिरोत्सन्नमचिरेण विनष्टं विनष्टा पुरीत्यादिवदाश्रयविनाशस्याधारे उपचारेणैवमुक्तम् ।

विसृजति हुतगन्धं वेदिरास्तीर्णदर्भा
न जहति बलिभूमौ षट्पदाः सौहृदय्यम् ।
इदमपि तरुशाखाचक्रवाले विषक्तं
द्विगुणयति पिशङ्गं वल्कलं पल्लवानाम् ॥ २ ॥

अत्र हि कश्चिद् विद्यते चेदाह्वयामि । अहमतिथिः कोऽत्र भोः!

( नेपथ्ये ) इत इतः स्वागतमतिथये ।

ऋषिः—न शून्यमिव ।

( ततः प्रविशति यथासम्भारव्यापृतो वृद्धतापसः )

वृद्धः—इत इतः स्वागतमतिथये ।

---

विनाशचिह्नान्येव दर्शयति—**विसृजतीति** ॥ इयं वेदी गार्हपत्याहवनीययोर्मध्ये उत्खातः आकीर्णदर्भः भूप्रदेशो वेदिः । यद्यपि हुतगन्धविसर्जने वेदिर्न साक्षात्कर्त्री तथाप्याहवनीयसामीप्याद् वेद्याः तत्कारकत्वेनैवमभिधानं सङ्गच्छते । षट्पदाः बलिभूमौ तत्कालानुष्ठितभूतयज्ञायां भूमौ सौहृदय्यं सुहृदयत्वं हृदयसौख्यमिति यावत् । बल्यर्थचन्दनकुसुमादिपरिमलमध्वास्वादादिसंभृतमानन्दं न जहति । किन्त्वनुभवन्त्येवेत्यर्थः । तरुशाखाचक्रवाले विषक्तं वातादिभिरार्द्रभूतया संभावयितुं लब्ध्वा शाखासमूहे विषक्तमवस्थितम् । अवस्थापनं विना तदसंभवात् तदाक्षिपति । एवंभूतमिदं वल्कलमपि कर्तृ पल्लवानां पिशङ्गं वर्णं द्विगुणयति । गोरोचनासदृशो वर्णः पिशङ्ग इत्युच्यते । अत्र गुणमात्रपरत्वाद्रागः । अत एव पटस्य शुक्ल इतिवद् पल्लवानां पिशङ्गमिति गुणिना सम्बन्धो दर्शितः । वल्कलगतस्य पिशङ्गिम्नः पल्लवेषु संक्रमणाद् द्विगुणत्वम् । वल्कलमित्येकवचनं सामान्यैकत्वाभिप्रायेणेति ज्ञेयम् । इह वल्कलानां नूतनत्वेनानतिचिरशोषितत्वेन च संभूतः पिशङ्गिमातिशयः आश्रमस्य तत्कालपरित्यागावगमे लिङ्गं भवति ॥ २ ॥

**अत्र कश्चिद् विद्यते चेत् आह्वयामीति** ॥ आह्वानेन प्रच्छास्यामीति पर्यवसानम् । अथ दशग्रीवं मारीचाश्रमं प्राप्तमाकर्ण्य तद्भयान्मुनिषु निर्गतेषु कश्चित् तापसो वार्धक्यजरया विलम्बमानो यात्रार्थं दण्डासनकमण्डल्वादिसंभारोद्वहनव्यापृतः सहसा मुनिकुमारस्याह्वानमाकर्ण्याह—**इत इत इति** ॥ इहासन्नपदेन संभ्रान्तमानसेनाप्यतिथिगोचरः समुपचारो मेऽभिमत इत्येतदवगम्यमानं तत्रत्यानां ऋषीणामतिथिपूजातात्पर्यातिशयमावेदयति । अत्र दर्भैरित्यत्र अपपदे भूयपदे च तात्पर्यं

ऋषिः—तपोधन ! भवन्मात्रावशेषं बह्वाभोगमाश्रममहं पश्यामि ।

वृद्धः—अयं तावत् पौलस्त्यबन्धोर्मारीचस्याश्रमः ।

ऋषिः—श्रूयते स कौशिकसुतेभ्यो रामशरोच्छिष्ट इति । किं स एव ।

वृद्धः—अथ किम् । अस्ति रावणभगिनी शूर्पणखा ।

ऋषिः—तिष्ठ, तपोवने रामशासनात् सञ्चरतो लक्ष्मणस्य

---

दर्शितम् । इदानीमतिथिपूजात्मके मनुष्ययज्ञे च श्रद्धा दर्शिता । एवं पञ्चयज्ञानुष्ठानपरत्वमधस्तनेन ग्रन्थेनावेदितं भवतीति । अथाश्रमस्याचिरोत्सन्नत्वे हेतुं जिज्ञासमान आह—**तपोधनेति** ॥ भवन्मात्रं भवानेवावशेषः अवशिष्टो यस्मिन् । अवशेषशब्देन पूर्वं सन्निहितानामेवेदानीं निमित्तान्तरादसन्निधानं दर्शितम् । तेन तन्निमित्तजिज्ञासा सूचिता । बह्वाभोगत्वं तस्य बहुमुनिजनसद्भावाद्यैवं गमयति । बह्वाश्रमस्यैवंभावे किं निमित्तमिति प्रश्ने वाक्यस्य पर्यवसानम् । अथ तन्निमित्तं वस्तु उपोद्घातरूपं कथान्तरं प्रस्तौति—**अयमिति** ॥ तावच्छब्देन आश्रमपरिचयं विना परचादपि बहु वक्तव्यमस्तीति सूचितम् । **पौलस्त्यबन्धोरिति** ॥ ततः सक्रोध इत्यादिना वक्ष्यमाणस्य रावणकर्तृकस्य मारीचाश्रमगमनस्य बीजत्वेनोक्तम् । अयमित्यनेनाश्रमस्यासन्नत्वेन तदस्य वृत्तान्तपरिज्ञानसौकर्यं दर्शितम् । **श्रूयते इति** ॥ स मारीचः कौशिकसुतेभ्यः रामशरोच्छिष्टः श्रूयते इत्यन्वयः । कौशिकसुतेभ्य इत्यनेन समानवयस्कत्वेन तैः सह स्वैरसंभाषणसंभावना दर्शिता । उच्छिष्टशब्देन यथा भोक्त्रा भुज्यमानस्यौदनादेरेकदेशे प्रस्तरादिदोषमिमनया छेदनेन तथा कर्तव्यक्रियमाणसुबाह्वादिनाशनेन रामशरेण भयवापन्नं पर्यवसायनमुक्तमिव इति दर्शितम् । श्रूयत इति वर्तमाननिर्देशः अद्यतकार्यस्य तद्वृत्तान्तश्रवणमस्य कौतुकं नुद्यन्ति दर्शयितुं कृत इति ।

**किं स एवेति** ॥ किं स एव भवता मारीचः सम्युक्त इत्यर्थः । अथ वृद्धस्तपस्वी तद्वचनादेव मारीचस्य रामभयात् तदाश्रयं तेन विदितं जानानः लक्ष्मणसुतेरुप दशग्रीवस्य मारीचाश्रमप्राप्तिनिदानभूतं शूर्पणखावृत्तान्तं वक्तुमारभते—**अस्तीति** ॥ निर्देशेनेन गतिनिवृत्तिवाचिना वचनेनोपरतिर्लक्ष्यते । तत्कथा बोध इति यावत् । तपोवने रामशासनात् सञ्चरतो लक्ष्मणस्येत्यनेन कविना रामलक्ष्मणयोः सह प्रवेशाभावनिमित्तं दर्शितम् । मन्त्रेणैव लक्ष्मणेनाभिधार्यमाणस्य

मुखादेव श्रुतं शूर्पणखाविरूपकरणं खरदूषणवधश्च,
ममापूर्वो मारीचवृत्तान्त एव ।

वृद्धः—ततः सक्रोधो रावणः मारीचस्याश्रममागतवान् ।

ऋषिः—ततस्ततः ।

वृद्धः—ततः "त्वं मृगरूपेण रामं विलोभ्य दूरीकुरुष्व, तावदहं सीतां स्वीकरिष्यामि" इति बहुशस्तेन स निर्बद्धः ।

ऋषिः—ततस्ततः ।

वृद्धः—ततस्तदानीं रामगौरवं बहुधा व्याहृत्य मुहूर्तं तूष्णीं समपद्यत स मारीचः ।

ऋषिः—सदृशमनुष्ठानमस्य । ततस्ततः ।

वृद्धः—ततः सक्रोधो रावणः

रचयन् भ्रुकुटीः प्रहस्य कोशा-
दुदहासीदसिमुन्मयूखरेखम् ।
विषमीभवति स्म यस्य धारा
सममैरावणदन्तिदन्तकोशैः ॥ ३ ॥

---

पूर्वाश्रमयादित्वाभावसम्प्राप्तिरपि दर्शिता । ममापूर्व इति ॥ योऽयं मारी-चस्याश्रमे रावणेन मारीचवृत्तान्तो मयानुपक्रान्तः ॥ स एवापूर्वः । अविदितचर-त्वादभिनव इत्यर्थः । ततः सक्रोध इति ॥ खरदूषणवधश्रवणानन्तरं ममता आत्मभगिनीवैरूप्यकरणात् खरदूषणवधाच्च हेतोः सक्रोध इति । तावदिति ॥ याव-न्मायाबलपरिगृहीतविचित्रमृगरूपेण सीतापरिहाय त्वया रामो दूरीकृतो भवति तावदित्यर्थः । बहुश इति ॥ बहुशो निर्बन्धेन निर्बद्धे कर्मणि तस्याप्यननु-मतिर्निर्बध्यते । तदेवाननुमननप्रकारमाह—रामगौरवमिति ॥ सदृशा-मिति ॥ यदिदमात्माभिनिवेशेन निर्बन्धे कृतेऽपि [illegible] कर्मणो निवर्तनं तत् [illegible] सदृशमनुरूपमित्यर्थः ।

तत इति ॥ [illegible] बहुधा व्याहृत्य [illegible] रावणः सक्रोधो भूत्वा [illegible] भ्रुकुटीं रचयन् । भ्रुकुटिः भ्रुवोः विकार-विशेषः । यथोक्तं भरतमुनिना—"भ्रुवोर्मूलोत्क्षेपणात् भ्रुकुटी परिकीर्तिता ।"

ततस्ततः ।

वृद्धः—ततस्तस्मादितो राक्षसदूषितादुद्विग्ना निरगच्छन्मिथमिनः । दृश्यते ननु त्वयापि मे गमनत्वरा ।

ऋषिः—यद्येवं साधयतु भवान् । अहमितो गच्छामि ।

वृद्धः—बाढम् ।

( निष्क्रान्तौ )

विष्कम्भकः ।

---

( ततः प्रविशति रामः सीतया सह )

रामः—( निमित्तं सूचयन् ) देवि ! अयमद्य
आक्रान्ताः किन्तु बालो भरत इति परैरुत्तराः कोसला मे
स्वर्गं शोकातिभारान्मम जनकसुते ! किन्तु याता जनन्यः ।

---

तिरोभूतो भवति तदान्येषामयं भावो विनष्ट इति प्रतिभासो भवति । पुनस्तस्य हेतोरुपगमे सति स्वकार्यं परहिंसादि कुर्वाणः फलेन सह जायते परमरूपेण बन्धनमरणादिना तदाभिव्यज्यते । फलाभिव्यक्तौ सत्यामेवं सदृशो भावो न विनष्टः किन्तु क्षण एव एतावन्तं कालमवस्थित इत्यवगम्यत इत्यर्थः । अत्र भावस्य हेतुनेनाभिव्यक्तिर्दृश्यते । अत्र दृष्टान्तः । यथा बीजानां संस्कारः दृढकरत्वादिसर्गत एव क्षणोऽनभिव्यक्तः सन् अङ्कुरादिकार्यं कुर्वाणः परमरूपेण मेघादिना तदावगम्यते । अत्र केन चि हेतुनेति न दृष्टान्तो योजनीयः ॥ ४ ॥

एवं मारीचवृत्तान्तमभिधाय तपोवनस्य राक्षसदूषितत्व तपोधनानामपगमने हेतुमाह—ततः इति ॥ एवं चेद भवान् कुतो नागमदिति चोद्यमवकाशाय दृश्यत इति । साधयतु भवानिति ॥ यतो भवतोऽपि तपोधनमनुरागादिमानस्य वा समानिष्पन्नपरिग्रहस्य वा नायमवसरः । अतः साधयतु शीघ्रं गच्छत्वित्यर्थः । अहमपि शीघ्रमन्यत्र गन्तव्यमनन्तरमित्यर्थः । एवं कवि शुद्धविष्कम्भकेण पूर्व भरतवृत्तान्तं रावणस्य सीतापहरणे यत्नं च वक्ष्यमाणं तदिवोगात् मारीचस्य मायाप्रयोगं च सूचयित्वाधुना प्रकृतमारभते—ततः प्रविशतीति ॥ निमित्तं सूचयन्निति ॥ वामनेत्रस्पन्दं वामबाहुस्फुरणादि निमित्तमनिष्टसूचकमित्यर्थः ।

देवि ! अत्रभवती भरताचि ! इति सम्बोधनेन कामाभिभवमात्रमनुरक्तम्.

**रक्षोभिश्छन्नमन्यैः खरवधरभसाद् वर्तते किन्तु माया**
**वामो वामाक्षि ! बाहुः स्फुरति तव शिखाबन्धनस्यैकबन्धुः ॥**

सीतायाः प्रशंसा क्रियते । अनया प्रशंसया प्रणयातिशयो व्यज्यते । अयं च प्रणयातिशयो भाविनो विरहदुःखस्य पोषकतां प्रतिपत्स्यते । अथेदानीं वामो बाहुः भूयो भूयः स्फुरति यतस्ततोऽस्माकं किञ्चिदनिष्टं अवश्यम्भावीति मन्यामहे । तत्र पितरि स्वर्गं गते मयि च दूरस्थे परैरिष्वाकुन्वेषिभिः । **बालो भरत इति ॥** इतिशब्दो हेतौ । भरतस्य बालत्वात् । तं परिभूय मे उत्तराः कोसलाः आक्रान्ताः किन्तु । बालो भरत इत्यनेन षष्ठ्यन्तेनाऽसमच्छब्देन च एवंभूतानिष्टाशङ्कायां भ्रातृस्नेहो राज्याभिलाषश्च निमित्तत्वेन गम्यते । न चास्य वचनस्य हते राज्य इत्यनेन विरोध इति वाच्यम् । तस्य सौमित्रेर्मायागोचरसंरम्भनिरासमात्रपरत्वात् । इतरथा चतुर्दशवर्षानन्तरं राज्यप्राप्तिरपि न घटेत । अथ भरतस्य बालत्वेऽप्यशक्तिर्न शङ्कितुं शक्यते । अस्माकं च वनं गतानां चतुर्दशसु वत्सरेषु दिशा एव संवत्सराः अपरिशिष्यन्ते । अत इदानीं भरतस्य बालत्वमप्यपगतप्रायमेव । अस्माकं च राज्यभोगकालोऽचिरेण वर्तिष्यते । अतः परैरिदानीमुत्तरकोसलाक्रमणे चिन्तापि न क्रियेतेति मन्यमानो मातृस्नेहेनान्यदनिष्टमाशङ्कते—**स्वर्गमिति ॥** मम जनन्य इत्यविशेषनिर्देशेन कैकेयीसुमित्रयोरपि कौसल्यायामिव भक्तिस्नेहादीनामाभिमुख्यं गम्यते । शोकातिभारात् भर्तृवियोगेनास्मद्विप्रवासेन च अनितस्य प्रतिक्षणं वर्धमानस्य दुःखस्यातिशयेन मरणात् स्वर्गं गताः किन्तु । अथैतावन्तं कालं दुःखं सोढ्वावतिष्ठमाना मम जनन्यः इदानीमवसितप्राये मम वनवासे तनयेऽस्मद्दर्शनाशामवलम्ब्य जीविष्यन्तीति मत्वानिष्टान्तरमाशङ्कते—**रक्षोभिरिति ॥** कर्तृनिर्देशः क्रियां विनानुपपद्यमानस्तामाक्षिपति । ततश्चात्र माया विशेषणतया क्रियमाणेति पदं द्रष्टव्यम् । अत्यन्ततोऽस्मान् परिभवितुमसमर्थैरन्यै रक्षोभिः खरवधरभसात् खरादिवधसञ्जातात् क्रोधात् छन्नं परोक्षीभूय क्रियमाणा माया वर्तते किन्तु । राक्षसमायाप्रभावप्रभवं यत् किञ्चिदनिष्टमस्माकमनेन सूच्यते किन्तु । तथापि तव शिखाबन्धनस्यैकबन्धुरित्यनेन मायाहेतुकस्य व्यसनस्य सीतागोचरत्वाशङ्का व्यज्यते । अत्र शिखाशब्देन केशपाशो लक्ष्यते । बन्धनशब्देन सान्द्रतयान्योन्यं दृढं संश्लिष्यावस्थितः समूहोऽभिधीयते । न तु बद्धः श्लथितः शिरोरुहनिबन्धनं तव मूर्धजन्मना वञ्जुलसत्कुसुमबन्धनं सुरभिकेशबन्धनमित्या-

सीता—अज्जउत्त ! णं तवो एव्व संति अमङ्गलस्स।
आर्यपुत्र ! ननु तप एव शान्तिरमङ्गलस्य।
( ततः प्रविशति मारीचः )

मारीचः—( सचिन्तम् )

बन्धुच्छेदो नु पापस्य जन्मनः प्रभुता नु मे ।
अपहस्तितसद्वृत्तं यन्मयेदमनुष्ठितम् ॥ ६ ॥

अथवा किं बहुना ।

शय्याभिधानस्य परस्य पुंसः शरव्यमापाद्य शरीरमेतत् ।
रक्षांसि सर्वाणि यमस्य लोकं प्रविश्य पूर्वं प्रतिपालयामि ॥७॥

---

क्षिप्रादिमन्त्रेव नाटके तथा प्रयोगदर्शनात् योनिस्यातिरेकाच्च । मदीयवामाङ्गुलि-कादिन्याः तथ शिरःकम्पनस्य केशकलापस्य सर्वदोहनदानेनाप्रभूतत्वात् बन्धुः प्रधानभूतो बन्धुः । दक्षिणबाहोः संयमनात्पुरस्ताद्वैवोपकर्तृत्वम् । अन्य सुहृदनेनाप्युपकर्तृत्वात् ततोऽधिकमिति भावः । अत्र शङ्का नाम व्यभिचारी दर्शितः । यथाह—"अनर्थप्रतिभा शङ्का परक्रौर्यात्स्वदुर्नयात् । कम्पशोषादिवी-क्षादिरत्र वर्णस्वरान्यता ॥" इति ॥ ५ ॥

आर्यपुत्र ! ननु तप एवामङ्गलस्य शान्तिः शान्तिकरमित्यर्थः ।

मारीचोऽनिच्छन्नपि भवितव्यतावशात् रावणनियोगमङ्गीकृत्य रामं वञ्च-यितुमुद्यतः सानुतापमाह—मया यदिदं रामवञ्चनात्मकं कर्मानुष्ठितमनुष्ठीयते । सान्वः पुष्ट इत्यादिवद् वर्तमाने निष्ठा । अपहस्तितसद्वृत्तमिति क्रियाविशेषणम् । पूर्वं मया नीचजनेन दुर्लभमपि यत्तपोऽनुष्ठानं नाम सद्वृत्तमङ्गीकृतं तदपहस्तित हस्तादपास्तं यथा भवति तथोक्तम् । तद् बन्धुच्छेदः किन्नु । बन्धुच्छेदस्य कारणभूत-स्यानुष्ठाने अर्थे समारोपादेवमुच्यते । मे पापस्य जन्मनः पापजातिजन्मनिमित्तत्वात् पापत्वं जन्मनः प्रभुता शक्तिः किन्नु । समारोपादेवमुक्तम् ॥ ६ ॥

[illegible] कर्मणः केवलत्वमप्रमाणय प्रमाणो मृत्यार—अथवा किं बहुनेति ॥ [illegible] कर्मणि [illegible] च [illegible] । [illegible] ।

[illegible] —रक्षांसि ॥ [illegible] ।

तत् क नु खलु रामाश्रमः । यत्र सपत्नीकं रामं विचित्रमृगरूपेण विलोभयामि । ( निष्क्रान्तः )

( ततः प्रविशति लक्ष्मणः कवचधरः )

लक्ष्मणः—"खरदूषणवधादुद्धृतकण्टकं जनस्थानमासीत् । अतो यथास्वं युष्माभिराश्रमपदानि सनाथीक्रियन्ताम्" इत्यार्यशासनात् विज्ञापितानां मुनिवृषभाणामनुग्रहाल्लङ्घ्यं कवचमकालेऽपि धारयामि । अपि च तैर्दत्तमार्याभ्यामलङ्करणीयम्—

वहामि मायापिशुनं रिपूणां
शरीरयोगे सति धार्यमाणम् ।
आश्चर्यभूतं मणिमंशुमाला-
गूढं सरत्नं च कराङ्गुलीयम् ॥ ८ ॥

---

संग्रामाभियोगानामन्यक्रान्ति कुर्वाणस्य परस्य पुंसः श्रीनारायणस्य शरव्यमायाम बन्धनात्मकस्यापि कर्मणः फलभूतेन तच्छरलग्नतापादनेन श्रेयःपर्यवसायित्वमिति भावः । पूर्वमेव यमस्य लोकमपरसम्बाध प्रविश्यान्याभि रक्षांसि प्रतिपालयामि । इह शरीरादौ विरक्तिः दाशरथौ भक्त्यतिरेको रावणादिष्ववहुमानश्च क्रमेण व्यज्यते । सपत्नीकं रामं विलोभयामीति ॥ सीताया अपि विलोभनेऽध्यवसायो दर्शितः । राममित्यनेन रावणनियोग एव विलोभने हेतुः नात्मनः प्रद्वेष इति दर्शितम् ॥ ७ ॥

अथ लक्ष्मणः खरदूषणवधानन्तर रामनियोगान्मुनीनुपगम्यार्यशासनं विज्ञाप्य तैरात्मने दत्त कवचममुष्यार्याभ्यां दत्तमङ्गुलीयकं चूडामणिं चादाय प्रतिनिवर्तमानः हर्षातिशयेन तामवस्थां निरूपयति—खरेति ॥ उद्धृतकण्टकमिति श्लिष्टम् । यथामरसिंहः "द्रुमाङ्गे क्षुद्रशत्रौ च रोमहर्षे च कण्टकः ।" इति । युद्धसमय एव कवचधारणस्यौचित्यात् अकालेऽपीत्युक्तम् । अकालधारणे हेतुः—मुनिवृषभाणामनुग्रहाल्लङ्घ्यमिति ॥ अनेन शक्तिवैचरस्यमधारणेऽज्ञादरप्रसङ्गश्चाकालेऽपि कवचधारणहेतुरिति दर्शितम् ।

अपि चेति ॥ तैरार्याभ्यामार्यायै आर्याय च दत्तमाश्चर्यभूतं मणिं चूडामणिं सरत्नं कराङ्गुलीयं च वहामीत्यन्वयः । विशेषणान्युभयत्र साधारणानि ।

यावदार्यमुपसर्पामि । ( उपेत्य ) जयत्वार्यः ।

रामः—( विलोक्य ) दिष्ट्या लब्धानुग्रहो लक्ष्मणः । लक्ष्मण ! किं दृष्टस्त्वया स वन्द्यो जनः ।

लक्ष्मणः—दृष्टः प्रत्येकं समूहतश्च । यथोक्तं विज्ञापितश्च ।

रामः—( आसनादुत्थाय ) किमाज्ञापयन्ति परापरविदः ।

लक्ष्मणः—आर्य ! श्रूयताम् ।

"क्षतजकणिकापातात् सन्ध्याघनच्छवि रक्षसां
नृवर ! सलिलं गोदावर्या न नो नियमक्षमम् ।
विषमिततला देवी विश्वम्भरा च समन्ततो
धरणिधरसङ्काशैस्तेषां कलेवरसञ्चयैः ॥ ६ ॥

---

अंशुमालागूढ परितः प्रसमरैः रश्मिसमूहैरयं भव एवालङ्करणीयमत्यन्तमलङ्करणयोरयं न केवलमलङ्करणमेवानयोः प्रयोजनम् । परमं प्रयोजनान्तरमप्यस्तीत्याह—**धार्यमाणं** अलङ्क्रियमाणम् । आभ्यामलङ्करणाभ्यामार्ययोर्मायाविनां रिपूणां शरीरेषु योगे संस्पर्शे सति तेषां मायापिशुनं मायासूचकं मायेयमिति ज्ञानस्य हेतुभूतं प्रकाशकमिति यावत् । "पिशुनौ खलसूचकौ" इत्यमरः ॥५॥

**दृष्टः प्रत्येकं समूहतश्चेति** ॥ प्रथमं प्रत्येकं दृष्टानां पुनः संभूय मायोपशमनोपायभूतचूडामण्यादिनिष्पत्त्यर्थं चिन्तामावेदयति—**परापरविद इति** ॥ परमुत्कृष्टं परमस्माद् अपरं तदधीनं ब्रह्मविषयकज्ञाने तदुभयं विदन्तीति परापरविदः । आर्य ! इत्याज्ञापयन्तीति सम्बन्धः ।

आज्ञापनप्रकारमाह—**क्षतजेति** ॥ हे ! नृवर ! लोकोत्तरपराक्रमादिगुणसम्पत्तया सर्वेषामेव नृणां श्रेष्ठ ! यदिदं भवता लक्ष्मणमुखेन यथास्वमाश्रमपरेश्वरवार्त्तं निवेदितं तदत्यन्तमुचितमेव किन्तु कतिपयान्यहान्यतीत्य तत् करिष्यामः । यतो गोदावर्याः सलिलमिदानीं नोऽस्माकं नियमक्षमं नियमशब्देन इतिकर्तव्यतादिभिः कालविशेषैर्मन्त्रविशेषैश्च नियतानि त्रिषवणस्नानमघमर्षणादीनि नियम्यन्ते अनया व्युत्पत्त्याभिधीयन्ते । तेषां न क्षमं अनुचितमित्यर्थः । अत्र हेतुः रक्षसां क्षतजकणिकानां रुधिरबिन्दूनामापातादिति । रुधिरबिन्दुसंमिश्रत्वात् मिश्रं सन्ध्याघनच्छवीति । हेत्वन्तरमाह—*विषमितेति* ॥ यतश्च देवी विश्वम्भरा धरणिधरसङ्काशैः पर्वतसमानैस्तेषां कलेवरसञ्चयैः समन्ततो विषमिततला प्रभात-

ततः कतिपयाहमत्रस्था एव वयं मद्गुणमार्गाभिवर्धयाम" इति।

रामः—अयमनिर्बन्धविषयो राशिः। (उपविशति)

लक्ष्मणः—प्रसीदत्वार्यः। (दर्शयत्याश्चर्यचूडामणिमद्भुताङ्गुलीयकं च)

रामः—(दृष्ट्वा सविस्मयम्) आश्चर्यमाश्चर्यम्।

सीता—अच्चरिं अच्चरिं। आश्चर्यमाश्चर्यम्।

रामः—किमाह फलं स वन्द्यो जनः।

लक्ष्मणः—आर्य।

मणिमंशुकेसरितमङ्गुलीयकं
कलधौतसिद्धमपि धारयन्ति ये।
समवाप्य तानचशमाशु मायिनः
प्रकृतिं भजन्ति सहसा सपाचराः॥ १०॥

---

निम्नोन्नतस्वरूपा। अनेनाशुद्धिः स्वैरसमाराधनत्वं च दर्शितम्॥ ९॥

यत एवं तत् तस्मात् कतिपयाहं कतिपयान्यहानि अत्रस्था एव मद्गुणं त्वा-मार्गाभिवर्धयामः। अनन्यपरेणाप्यनेन वाक्येन रामप्रशंसापि तैः कृतेति द्रष्टव्यम्। अयमनिर्बन्धविषयो राशिरिति॥ अत्र राशिशब्दः समूहवाची प्रकरण-बलात् मुनिसमूहे वर्तते। तपस्वामारायणुषणी वयं इति वनैशब्देन समूहवाचिना मुनिसमूहस्योपादानात् राशिशब्दस्यैतदर्थत्वं निर्धार्यते। अयमभिप्रायः। यावत् गोदावर्याः तत्तीरप्रदेशानां वा शुद्धिर्भविष्यति तावदहमत्र स्थित्वा भवद्भिः सहैव गमि-ष्यामीति निर्बन्धमकृत्वैव त्वं प्रत्याशा इति यत् तदत्यन्तं समीचीनमेव। यतो मुनीनां समूहो निर्बन्धस्य विषयो न भवति। अथवा राशिशब्देन मेषादिकालैकदेशवाचिना तद्गत कालसामान्यं लक्ष्यते। तथा चायं कालो निर्बन्धविषयो न पूर्वोक्तप्रकारेण गोदावरी-तीरप्रदेशानां निवासयोग्यत्वाभावादित्यर्थः सम्पद्यते। किमाह फलं स वन्द्यो जन इति॥ जटाचीरधारिणामस्माकमलङ्क्रियानपेक्षितत्वात् तन्मात्रफलत्वमनयोर्न संभवतीति अभिप्रेत्य फलान्तरप्रश्नः कृतः।

तदुक्तं फलमाह—मणिमिति॥ ये अंशव एव केसराः सञ्जाता अस्येति अंशुकेसरितम्। "तदस्य सञ्जातं तारकादिभ्य इतच्" इति इतच्। एतदुभयो-

इति । प्रसीदत्वार्यः न महर्षिशासनमुपेक्षणीयम् ।

( पुनरुपनयति )

रामः—लक्ष्मण ! कवचस्य किमाह फलमसाधारणसुखार्थी वर्गः ।

लक्ष्मणः—शरेभ्यो मर्माणि रक्षतीति ।

रामः—यद्येवम्, आनय प्रतिगृह्णामि सिद्धार्थानां प्रीतिलताकुसुमम् । (आदाय चूडामणिं सीतायाः शिखापाशे बद्ध्वा आत्मनः कराङ्गुलिमङ्गुलीयेन योजयति )

सीता—(ससंभ्रममवलोक्य) अज्जउत्त ! किं एदं अवरं अच्चरिअं ।

आर्यपुत्र ! किमेतदपरमाश्चर्यम् ।

रामः—लक्ष्मण ! पश्य पश्य रूपपरिवर्तनं वनान्तरस्य ।

लक्ष्मणः—आर्य ! पश्यामि ।

कस्य किन्तु कुतस्त्यन्नु केनेदं दीप्यते वनम् ।
अनभ्रविद्युदापातपरीतैरिव पादपैः ॥ ११ ॥

---

विशेषणं स्मरणं च कराङ्गुलीयकमित्युक्तत्वात् । तथाभूतं मणिं कल्पितसिद्धं देवा सिद्धिमुपगतं अङ्गुलीयं च धारयन्ति । मायिनो मायया रूपान्तरं प्रतिपन्नाः रूपान्तराः तान् समवाप्य सत्त्वरमाशु यद्वा [illegible] मायया प्रकृतिविपरीतविशेषणे सत्यपि प्रकृतिं स्वरूपं गमयन्ति इत्येतत् फलमाहेति । शेषमुन्नेयम् ॥ १० ॥

असाधारणं नित्यं सुखमर्थयत इति असाधारणसुखार्थी । **सिद्धार्थानां प्रीतिलताकुसुममिति** ॥ सिद्धः अर्थः परमपुरुषार्थो येषां ते सिद्धार्थाः । अङ्गुलीयादौ कुसुमत्वारोपे कान्तिप्रकर्षोऽलङ्करणीयत्वं च समानो धर्मो निमित्तम् । सत्कारत्वेन पुनः प्रीतेर्लतात्वमारोपितम् । रूपकमलङ्कारः । यदाह—"अभेदप्राधान्य आरोपः आरोपविषयानपह्नवे रूपकम्।" इति । अत्र मारीचेन मायाप्रभावादितविचित्रमृगरूपेण [illegible] रामाभिहिते [illegible] सीता सहसा वनस्य वर्णभेदमवलोक्य ससंभ्रममाह—**आर्यपुत्र ! आश्चर्यभूतचूडामण्याद्वैरपरमाश्चर्यं दृश्यते किमेतत्** ॥ अथ रामो विलोक्य एव लक्ष्मणाय सकौतुकं दर्शयति—**पश्य पश्येति** ॥ **आर्य ! पश्यामीति** ॥

११ [illegible] दर्शनसमय एव तयोरेव दर्शनेन [illegible] इतिवत् ।

दर्शनसमये दृश्यमानप्रकारेण [illegible] विस्मयविशेषमाह—

(नेपथ्ये मुर्मुराशब्दः क्रियते । सर्वे ससम्भ्रमं विलोकयन्ति)

रामः—

पथि जलमुचामुत्सर्पिण्या रुचा गतिविभ्रमा-
दनिमिषपतेरातन्वानं शरासनमद्भुतम् ।
रजतचरणं रत्नग्रीवं हिरण्मयविग्रहं
तरुणि ! तरुणं पश्यारान्मृगं मृगलोचने ! ॥१२॥

---

**कस्येति** ॥ प्रथमदर्शनसमये एवानिर्धारितवस्त्वाकारानिर्विकल्पमापातज्ञानं किञ्चिदस्त्यनेन दर्शितम् । अथ दृश्यमानस्य वर्णभेदे तेजस्सामान्येन कृतमवधार्य तद्विशेषं जिज्ञासते—**केनेति** ॥ केन तेजोविशेषेण कर्त्रा इदं वनं दीप्यते । अथ सम्बन्धिविशेषनिर्णयाधीनत्वात् वेषादिविशेषज्ञानस्य तेजःप्रभावसम्बन्धिगोचरां जिज्ञासां करोति—**कस्येति** ॥ तापसीतापसिनीदिव्यजनसन्निधानादीनामन्यतमस्य कनकद्युतेदं तेज इत्यर्थः । अथ निपुणं विलोक्य सम्बन्धिविशेषमपश्यंस्तदन्वेषणार्थं तेजःस्थलादागमनापादानभूतं दिग्विशेषं जिज्ञासते—**कुतस्त्यमिति** ॥ तत्र विशिनष्टि—**पादैरिति** ॥ सहितमित्यध्याहार्यम् । कथम्भूतैः अनभ्रविद्युद्दामानपरीतैरिव प्रभाप्रभावतोरनतिभेदात् तत्प्रभाया आपात एव विद्युद्दामात् इत्युच्यते । तेन परीतैरनुलिप्तैरिव । उत्प्रेक्षात्रालङ्कारः ॥११॥

अथ सुखोत्कर्तनसमयसमुत्थमुर्मुराशब्दमाकर्ण्य तदनुसारेण सर्वे दत्तदृष्टयो विचित्ररूपं तं मृगमालोक्य विस्मयमुपागमन् । तत्रापि रामं सीतां चोद्दिश्य मारीचेन मायायाः प्रयुज्यमानत्वात् तयोस्तस्मिन्नत्यन्तमौत्सुक्यमभूत् ।

तत्र रामः सीतायै तं गुणवर्णनापूर्वकं दर्शयति—**पथीति** ॥ हे ! तरुणि ! परिपूर्णयौवने ! इदानीं तव तारुण्यस्य समुचितविषयानुभवेन सफलीकर्तुमवसरो जात इति भावः । सीतालोचनयोर्मृगनेत्रसमसाधर्म्यमनुभूय सम्बोधयति—**मृगलोचने ! इति** ॥ आराद् दूरे स्थितं तरुणं यौवनोदयेन रमणीयदर्शनं काञ्चनमृगं वीक्षस्व । तया दृश्यमानेऽपि तस्मिन् पुनर्दर्शनविधानं तस्यात्यन्तादृष्टत्वेन दर्शने सादरत्वमनुवृत्तिं चोत्पादयितुं कृतं सामान्यबुद्ध्यास्य दर्शने नानादरः कर्तव्य इति भावः । कथम्भूतं जलमुचां पथि अन्तरिक्षे उत्सर्पिण्या ऊर्ध्वं प्रसरन्त्या सितश्यामरक्तवर्णया रुचा कान्त्या अनिमिषपतेरिन्द्रस्य शरासनमातन्वानमैन्द्रं धनुर्हि सितश्यामरक्तवर्णत्वेन प्रसिद्धम् अत एवाद्भुतम् । अथवाद्भुतमिति शरासनविशेषणम् । ऐन्द्रधनुर्विधान-

लक्ष्मणः—आर्य ! अपि नामेय राक्षसी माया न स्यात्।
रामः—अस्मिन्नुभयथापि यत्नः कर्तव्यः।

परमार्थमृगोऽयं चेत् सिद्ध्यत्यस्या मनोरथः।
परीक्ष्यो व्यक्तमस्माभिरत्र मायामृगो यदि ॥१३॥

लक्ष्मणः—प्रसीदत्वार्यः। (प्रस्थातुमिच्छति)
रामः—तिष्ठ, ननु रक्षणं देव्यास्तवाधिकारः। अपि च,

अभिगम्य मुनीन् वने वने विनिवृत्तस्य चिदूरवर्तिनः।
श्रमवारि ललाटमण्डले तव बध्नाति कुमार ! जालकम् ॥१४॥

---

निर्बन्धेन मारीचस्याधिदेवताप्रतिपत्तिक्रमबलेन दाशरथेश्चित्ताकर्षस्यापि क्रमेण प्रकर्षो दर्शित। अथ लक्ष्मणो मायाबलेन सञ्जातमृगभ्रान्तिरपि मारीचस्य लक्षितविक्षोभनमुद्रिरयाभिसन्धानाभावादन्यादृश्चित्त सन् तत्तत्त्व निरूपयति—**अपि नामेति**। इह नञा रहितमेक वाक्यम्। पश्चात्पश्च इत्थमेव योजना। अपिनामशब्द शङ्कायाम्। सम्भावनायां लिङ्। अयमर्थः। अपि नामेय राक्षसी रक्षःसम्बन्धिनी माया स्यात्, दृश्यमानस्यास्य राक्षसमायात्वे सम्भावना विद्यते। तत्सद्भावस्तु न निश्चेतु शक्यते संभावनाया सद्भावेन व्याप्त्यभावात्। अतो दृश्यमानस्यास्य राक्षसमायात्वज्ञान विपर्ययशङ्काकुलीकृतत्वेनैव संभावनागोचरस्तु ज्ञान निश्चयात्मक इति विवेक। सम्भावनामेव काकुसनाथेन नञा द्रढयति—**नेति**॥ अतो सम्भावना न किं विद्यते विद्यत एव अतोऽस्य राक्षसमायात्व नात्यन्तमसङ्गतम्। तत्रचाविरतसर्गापत्वादस्मिन्नौत्सुक्य न युक्तोदर्कमिति भाव। एव लक्ष्मणेन निवारणमभिप्रेत्याशङ्कितस्य मायामृगत्वस्य रामः पुनरौत्सुक्याविरामेण प्रवृत्तिहेतुत्व समर्थयते—**अस्मिन्निति**॥

**अत्रेति**॥ अत्र वने यदि कश्चिद् राक्षसो मायामृगरूपमवलम्ब्य वर्तेते तर्ह्येव परीक्ष्यः व्यक्त निश्चितमेतदित्यर्थः ॥१३॥

अथ लक्ष्मण मायामृगग्रहणार्थमिच्छन्त निवारयन्नाह—**तिष्ठेति**॥ इतरबलेन मुनिजनः पीड्येतेति भाव।

**अभिगम्येति**॥ हे कुमार ! विदूरवर्तिन इतोऽत्यन्त विदूरे वर्तमानान् मुनीन् वने वने प्रत्येकमभिगम्य। अनेन मुनीनामन्योन्य च विदूरवर्तित्व दर्शितम्। विनिवृत्तस्येत्यनेन अन्तरा विश्रमाभावो दर्शित। एवमूतस्य तव ललाट-

लक्ष्मणः—भवतु, ननु यथोक्तानुष्ठानं गुरुजनानुवृत्तिः ।

रामः—लक्ष्मण ! धनुस्तावदानय, यावदयं न दूरीभवति ।

लक्ष्मणः—यदाज्ञापयत्यार्यः । ( धनुरुपनयति )

रामः—( धनुर्गृहीत्वा निष्क्रान्तः )

लक्ष्मणः—हन्त ! न स्वन्तोऽयमारम्भः । अयमयं मृगः,

मरतकमयीं ग्रीवां साचीकरोति पुनः पुनः
तृणमभिनवं जिह्वाग्रेण स्पृशन्निव धावति ।
भ्रमति परितो वृत्तानुच्चैरधोऽपि च दृश्यते
नमयति धनुः कोपादार्ये तिरोभवति स्थले ॥१५॥

हा ! हन्त ! चक्षुषोर्न गतिस्ततः परम् ।

---

कमयचले भ्रमकारि कर्तुमिदानीं आलक कोरक वर्तते । यथामरसिंह —"कोरकौ जालक क्लीबे कलिका कोरकोऽस्त्रियाम्" इति । यतो मार्गे भ्रममाणा स्वेदबिन्दव इदानीमपि कोरकाकारेण वर्तन्ते अतस्त्वामस्मिन् कर्मणि न क्लेशयामीत्यर्थः ॥१४॥

अथ लक्ष्मणः आत्मनोऽपर्याप्त धनुरादाय मायामृगमनुगच्छन्तं राममालोक्य सविषादमाह—हन्तेति ॥ अयमारम्भ इति ॥ अयमारम्भो न स्वन्त अशोभनपरिणाम इत्यर्थः ।

अथ मायामृगस्य विविधाश्चेष्टा पश्यन् विस्मयविषादविवशीकृतस्ततो भूत्वाह—अयमयं मृग इति ॥ पुन पुनर्मरतकमयीं ग्रीवां साचीकरोति साचीकृत्यानुगच्छन्तमार्यं पुनः पुनरीक्षत इत्यर्थः । पुनर्जिह्वाग्रेणाभिनव तृण स्पृशन्निव धावति । इह पूर्वार्धे दाशरथेश्चित्तविलोभनाय मारीचेन मृगमनोहरतत्स्वभावो दर्शित इति व्यज्यते । उत्तरार्धेनवक्ष्यमाणेन कोपादित्यनेन पूर्वं ग्रहणार्थं महान् प्रयत्न कृत इति गम्यते । तदाशयमर्थं सम्पद्यते । आर्ये ग्रहणार्थं प्रयतमाने वृत्तान् परितो भ्रमति । "अभित परित समयानिकषाहाप्रतियोगेऽपि" इति द्वितीया । उच्चैरधोऽपि च दृश्यत इति ॥ अथ स्थित्वास्य ग्रहणार्थं प्रयतमाने आर्ये उच्चैरुत्पत इत्यर्थः । अथ तद्ग्रहणार्थं प्रयत्नवैफल्यजनितात् कोपादार्ये तन्निग्रहार्थं धनुर्नमयति । हा मन्दभाग्याकर्णमाकृष्यति स्थले तिरोभवति क्वचिदपि न दृश्यत इति यावत् । अनेन मारीचस्येम दूरमानीयैव शरीर त्यक्ष्यता नेष्यामीत्यभिप्रायो व्यज्यते । अनेन लक्ष्मणस्य कथं सर्वभुवनपराक्रमस्यार्यस्य मृगमात्र दुष्प्रापत्वं

सीता—हं णअणगोअरं अदिक्कन्दो अज्जउत्तो।
हं नयनगोचरमतिक्रान्तः आर्यपुत्रः।
( ततः प्रविशति रावणो रथेन शूर्पणखया सूतेन च )

रावणः—

मयि जीवति मानुषाद्वयासा
विपदं मे सहजा शुचं जहातु।
अपमृत्य पतिं हरामि सीतां
तुरगान् सूत! जवेन चोदय त्वम्॥ १६॥

---

शान्यता वा नोपायासीदिति चिन्ता विस्मयश्च व्यज्यते। तिरोभवनेन मृगत्वा-
सम्भावनाबुद्धया विषादश्च व्यज्यते॥ १५॥

अथ मायामृगेणान्यत्र दूरीकृतमार्यमपश्यन् सशोकमाह—हा! हन्तेति॥
तथैव सीतापि शोकसमाकुलमानसा भूत्वाह—हमिति॥

अथ दशग्रीवः सीतागुणगणाकर्णनजनितेनानुरागेणात्मभगिनीवैरूप्य-
करणजनित क्रोधमवधान चोल्लङ्घ्य विजृम्भमाणेन विवशीकृतमानसो दाशरथिं
परशुरामजयाद्यपदानश्रवणेन दुर्जयं मन्यमानो मायाप्रयोगेण तं वञ्चयित्वा जानकी-
मस्मात्कर्तुं कृतनिश्चयोऽनङ्गीकृतसङ्ग्रामसन्नाहो भगिनीसूतमात्रसहायो रथेन
मातुलाश्रममाप्य मायाप्रयोगनिपुणं तं सीतासमीपाद् रामं दूरीकर्तुं नियुज्य
रामतपोवनं प्रति नभसा गच्छन् आत्मस्वामिनोऽपथवृत्तिमनिच्छता सूतेनासम्यक्
चोद्यमानत्वादश्वानां मन्थरगमनमालक्ष्य सीतादर्शने तनीयांसमपि कालविलम्ब-
मसहमान आत्मगतं स्मरचापलं निगूहयमानमेव सीताहरणहेतुकत्वेनारोप्य सूतं
सनिर्वेदं रथचोदनाय नियुङ्क्ते—मयीति॥ हे! सूत! यतस्त्वमत्यन्तमूढ
इव मन्दमेव तुरगांश्चोदयसि। अतस्त्वं मदीयं नूतनमवमानविशेषं जानन्नपि
फलतो न जानास्येव। अतस्त्वां तस्य गौरवं बोधयामि—एषा मे सहजा साक्षात्
सहोदरी। न तु राक्षसजातीयोऽन्यः कश्चिद् परिवारजनो वा सोदरो वा
अहीनपराक्रमे सुरासुरविजयिनि मयि जीवत्येव मानुषात् न ॥ सुरासुराणामप्यत-
मस्माद् कर्णनासच्छेदरूपां विपदमवाप्ता। ईदृश्या विपदोऽपि निग्रह एव वरमिति
भाव। अत एषा सच प्रतिक्रियादर्शनात् एवम्भूतविपत्प्राप्तिहेतुकां शुचं दुःखं
जहातु। का पुनः प्रतिक्रिया यथास्याः शुचः परित्यागो भवेद्। अत आह—

सूतः—यदाज्ञापयत्यायुष्मान् । ( रथं चोदयति )

शूर्पणखा—अज्ज ! मा मा संरंभक्कमेण । कदत्थिदमहेन्दविक्कमस्स अज्जस्स कहं सो माणुसो विसओ भवे । जह उव्वेएण सा जीविअं ण परित्तजति तह सीदं हत्थे करिस्सामो । णं सा तस्स पाणा ।

आर्य ! मा मा संरम्भक्रमेण । कदर्थितमहेन्द्रविक्रमस्यार्यस्य कथं स मानुषो विषयो भवेत् । यथोद्वेगेन सा जीवितं न परित्यजति तथा सीतां हस्ते करिष्यामः । ननु सा तस्य प्राणाः ।

---

अपमृध्येति ॥ अहं राममपमृध युद्धे निहत्य सीतां हरामि । यदि सीतासमीपे रामेण सह युद्धं क्रियेत, ततः सा भालमयदुरयुद्धदर्शनादेव प्राणान् परित्यजेदिति मत्वा मया रामो दूरीकृतः न त्वसामर्थ्यादिति स्वां भगिनीं च बोधयितुमेवमुच्यते । ननु कथं रामं दुर्जेयं मन्यमानस्यापमृध्येति प्रतिज्ञा घटते यथा मम भगिनी मायेयानपगतरामगोचरानुरागैव मायेव वर्तते । अत एषा स्वयमेव तदर्थं निवेदयतीति मन्यमानस्येदं वचनमित्यविरोधः । अत एवंभूतमवमानं वचमप्रतिकुर्वन् न सोढुं शक्नोमि अतस्त्वं तुरगान् जवेन चोदयेति योजनीयम् ॥ १६ ॥

अथ शूर्पणखा मयापातिशयेन रामपराक्रमविचारविधुरा सीतारहितं तं रामं भरोऽकर्तुमध्यवस्यन्ती निमित्तान्तरेण तदर्थं निषेधति—मा मा इति ॥ संरम्भक्रमः संरम्भस्य क्रमणं प्राप्तिः संरम्भस्य कुतो न कर्तव्यत्वमत आह—कदर्थितेति ॥ कदर्थितो निन्दितो महेन्द्रो येन सः कदर्थितमहेन्द्रः । तादृशो विक्रमो यस्य सः तथोक्तः । तस्यार्यस्य कथं स मानुषो विषयो भवेत् । अयोग्य विक्रमस्य विषय इति सिध्यति । असमानविषयो हि विक्रमोऽवमानमेव पुष्णाति [illegible] मानमिति भावः । न केवलं रामवधेनावमान एव अपि तु इष्टवियोगोऽपीत्यभिप्रायेणाह—उद्वेगेति ॥ यथा सा उद्वेगेन दुःखातिशयजनितेन जीवनविषयेण विरागेण जीवितं न परित्यजति तथा तेन प्रकारेण राममहत्वैवेत्यभिप्रायः । रामहननादन्यदपि यद् वियोगकारणं संभाव्यते तदपि परिहर्तव्यमिति दर्शयितुं तथेति सामान्येनोक्तम् । अत एव रावणो मायारामो भूत्वा सीतामपहरिष्यतीति हस्ते करिष्याम इति । "नित्यं हस्ते पाणावुपयमने" इति गतिसंज्ञया हस्तेशब्दस्य धातोः प्राक्

सूतः—( आत्मगतम् ) हताः स्त्रियः पापे कर्मणि पण्डितानतिशेरते ।

रावणः—(मुहूर्तं ध्यात्वा) युक्तमभिहितमनया । सा सीता नाम,
युधि सरभसं हत्वा रामं बलान्मयि गृह्णति
स्वयमनुचिता भर्तुः शोकादसून् न किमुज्झति ।
अपि च मनुजं हन्तुं रामं स्पृशन्ति किमायुधं
त्रिदशविजयश्लाघापात्रीकृता मम बाहवः ॥१७॥

---

प्रयोग. । रामस्य हननात् सीताहरणमेव तत्कृतस्यापराधस्य साधीयसी प्रतिक्रियेत्याह—ननु सा तस्य प्राणा इति ॥ एवंभूतेषु न्यक्त्वेन विक्रमायोग्येषु जीवन्मृतत्वापादनमेव समुचितः प्रतीकार इति भावः । अथ सूतस्तस्या दुरभिप्राय रावणाद्धिकं वञ्चनापाटवं च तद्वचनाद्वालस्य सनिर्वेदं स्त्रिय एव सामान्येनोपालभते—हता इति ॥ हताः स्त्रियः पापे कर्मणि पण्डितान् पापकर्मानुष्ठानप्रदर्शने पटून् पुरुषानतिशेरते । पापकर्मानुष्ठानप्रकारदर्शनादधिकमात् तानतिराव्य वर्तन्ते इत्यर्थः । अतो हेतोरत्यन्त दुष्टा एव । मुहूर्तं ध्यात्वेति ॥ सर्वथैवया तथेत्यनेन सामान्यतो रामहननादन्यस्यापि सीताया उद्वेगकारणस्य यो निरासः कृत तद्विषयं ध्यानं रामहननाकरणस्य तद्वचनात् पूर्वमेव निश्चितत्वादिति ज्ञेयम् । अथैवमेव स्वरूपप्रकाशनेन मया बलात्कारेण गृह्यमाणा सीता परिचयाभावान्महद्धोद्वेगेन प्राणान् परित्यक्ष्यत्येव । अत स्वरूपमाच्छाद्यैवां हरिष्यामीति निश्चित्य तद्वचनमभिनन्दति—युक्तमिति ॥ अनया यद् रामेण सह युद्धमकरणनावह तदथ सीताया जीवितपरित्यागहेतुरिति चाभिहितं तद्युक्तमिति पराभिप्रायानुसारेणोच्यते स्वमते तस्य सिद्धत्वेनावक्तव्यत्वात् । रामवधादन्यदप्युद्वेगनिमित्त वर्जनीयमिति यदभिहितं तद्युक्तमित्येतत् स्वमतानुसारेणोच्यत इति ज्ञेयम् ।

एतदेव विवृणोति—युधीति ॥ युधि सरभसं सक्रोधं रामं हत्वा एवमेव स्वरूपं प्रकाश्य मयि बलात्कारेण सीतां गृह्णति सति । सीता नाम सौन्दर्यादिगुणैः सीतेति सर्वलोकप्रसिद्धा । अनेन प्रणयातिशयेन तत्पीडनेऽनिच्छा सूचिता । सा भर्तुः शोकात् ॥ इह भर्तारं विषयीकृत्योत्पन्नाच्छोकात् । ल्यब्लोपे पञ्चमी षष्ठ्या । अर्थादवृष्टपूर्वमदाकारदर्शनबलात्कारग्रहणादिजनितभयशोकादिभिरेव स्वयमेवासून् न किमुज्झति । उज्झत्येव । अत्र हेतुरनुचितेति । असञ्जातमत्परिचया इत्यर्थः ।

रावणः—सूत ! यातव्या रामपर्णशाला न कैलासः।

सूतः—आयुष्मन्नधिकारनिरपराद्धोऽहम्, अतः परमायुष्मानेव प्रमाणम्। एष मुञ्चामि (आत्मगतम्) प्रथमं साध्वाचारं पश्चात् प्रग्रहम्। (चोदयति। सर्वे रथवेगं निरूपयन्ति) (प्रकाशम्) आयुष्मन् ! पश्यतु रथवेगम्।

तोयोद्गारि कदम्बकं जलमुचामायाममापद्यते
　घण्टाः स्तम्भितशृङ्खलाश्चपलतामुज्झन्ति मूकैर्मुखैः।
कर्णान्ते जपतीव चामरमिदं संस्तम्भितं वायुना
　तूर्णं त्वामुपसर्पतीव पुरतो यातव्यमिच्छावशात् ॥१६॥

---

रत सञ्चरणमतिशायिनः अश्वगुणैस्तानतिक्रम्य वर्तमाना इत्यर्थः। इह रसलना-दीनां हेतुत्वाभिधानमुत्पातज्ञापनार्थं कृतमिति ॥ १८ ॥

**अधिकारनिरपराद्ध इति** ॥ उत्पातज्ञापनमात्रं ममाधिकारः। कृतं च तद् इत्यधिकारे निरपराद्धोऽहं विज्ञापनात् परं यत् प्रवर्तनं निवर्तनं वा तत्रायुष्मानेव प्रमाणं नियामकः नाहमित्यर्थः। **साध्वाचारमिति** ॥ पापकर्मानुष्ठाने सहाया-करणं नाम साध्वाचारः तं प्रथमं मुञ्चामि। पश्चात् प्रग्रहं मुञ्चामीत्यनुषङ्गः।

रथवेगं वर्णयति—**तोयेति** ॥ पयोगर्भाणां जलमुचां कदम्बकं रथसङ्घट्टनेन तोयोद्गारि भूत्वा सद्य एव रथवेगसमीरणानुविधानादायामं दैर्घ्यमिवापद्यते प्रा-प्नोति। तथाश्वानां कण्ठालङ्कारभूता घण्टाः रथवेगेन स्तम्भितशृङ्खलाः स्तम्भिता आधारभूताः शृङ्खला यासां ताः अत एव मूकैरुपरतस्वनैर्मुखैर्घुर्घुरस्वनाश्चपलतां क-म्पमुज्झन्ति। रथवेगातिशयजनितविस्मयानन्दस्तिमिता इव निःशब्दमवति-ष्ठन्त इति चेतनत्वसंपादकैर्मुखादिशब्दैर्द्योतितम्। वायुना संस्तम्भितमिदं चामर-मश्वानां कर्णान्ते किमपि रहस्यं जपतीव मन्त्रयते [illegible] अमात्य इव राज्ञ कर्णान्ते इति कर्णान्ते जपतीत्यनेन द्योतितम्। तथा पुरतोऽग्रतो यातव्यं प्राप्यप्रदेशः कर्ता इच्छावशात् भवता यः प्रदेशः अतिदूरे वर्तमानः कथंचिन्नयन-गोचरः सन् प्राप्यत्वेनेष्यते इच्छया समकालमेव तस्य भवतासादितत्वात् न तत्र गम्यत इति निश्चीयते। इच्छानन्तरमेव व्यापारान्तरासंभवात्। अतो मन्यामहे प्राप्यदेश एव भयात् तूर्णं मामुद्दिश्यागमनारम्भात् पूर्वमहमेव तत्र गच्छामीति मत्वा त्वरिततरं त्वामुपसर्पतीव। उभयत्रापि क्रियोत्प्रेक्षालङ्कारः। अप्रकृतगतगुणक्रिया

शूर्पणखा—सच्चं एव्व सुदो मन्तेदि । अज्ज ! आअदम्ह राम-
तपोवणं ।

सत्यमेव सुतो मन्त्रयते । आर्य ! आगता स्मो राम
तपोवनम् ।

रावणः—क्व च ते व्यसनमूलस्य रामस्य प्राणसमा ।

शूर्पणखा—एं एसा सा । नन्वेषा सा । (अङ्गुल्या निर्दिशति)

रावणः—(सीतां विलोक्य सविस्मयम्) इयं सा त्रैलोक्यसुन्दरी
सीता नाम । अहो ! चित्रमहो ! चित्रम् ।

इन्द्राणीमहमप्सरोभिरनयं कारागृहे गच्छतां
संहारो जयता दिशो दश मया स्त्रीणां कृत पुष्पके ।
कैलासोद्धरणेऽपि मेरुसुमतीमद्राक्षमद्रेः सुतां
दृष्टेतासु न रूपमीदृशमहो ! चक्षुश्चिरात् सार्थकम् ॥२०॥

---

[illegible] भ्रान्तत्वेन प्रकृतरसाभिमान कल्पयेति ॥१८॥

क्व च ते व्यसनमूलं राम इति पर्यनुयोगावरणात् सीताहरणस्य तात्पर्यं तद्दर्शने कालविलम्बासहिष्णुत्वं च दर्शितम् । ते व्यसनमूलस्येत्यनेन सीताहरणस्य तद्व्यसनोपशमनार्थत्वं द्योतयति । प्राणसमेत्यनेन तस्यां हृतायां तत्प्राणा एव हृता भवन्तीति व्यज्यते । अथ स तया दर्शितां तामवलोक्य कान्तिलावण्यसौकुमार्यां [illegible] विस्मयानन्दाभ्यां पातिव्रत्यभावेन [illegible] च [illegible] [illegible] तां प्रत्यभिजानाति—इयमिति ॥ [illegible] [illegible] धामाको [illegible] । त्रैलोक्यसुन्दरीति ॥ त्रैलोक्यसुन्दरी [illegible] ।

त्रैलोक्यसुन्दरीत्वमेव व्यतिरेकमुखेनोपपादयति—इन्द्राणीमिति ॥ अह-मप्सरोभिः सह इन्द्राणीं कारागृहे गच्छतां [illegible] । [illegible] [illegible] न [illegible] । तेन [illegible] [illegible] लभ्यते । [illegible] एव हि [illegible] लभ्यते [illegible] दर्शनाच्च तद्दर्शने एव [illegible] गुणविशेषाणां तारतम्य स्फुटीभवति इति मत्वेदमुच्यते । तथा दश दिशो जयता मया [illegible] [illegible] [illegible] । तत्र तत्र मनोहरदर्शनानां स्त्रीणां पुष्पके [illegible] [illegible] आहरणमिति [illegible] । [illegible] । [illegible] [illegible] सुतां जगदीश्वरीं कैलासोद्धरणसमयेऽद्राक्षम् । मेरुसुमतीमित्यनेन [illegible] [illegible]

(सङ्कल्पपर्याकुलो भूत्वा) सम्प्रति हि,
पानाद् रूपरसायनस्य बहुधा सन्तर्पयन्ती मनो
जाता नेत्रपरम्परा फलवती धीरेतरेयं मम ।
अस्याः पल्लवकोमलां तनुमिमामालिङ्गय कृत्स्नामहं
निर्वेदयामि कदा नु विंशतिममून् वीरव्रणाङ्कान् भुजान् ॥२१॥

शूर्पणखा—(आत्मगतम्) फलिदो मे कामो ।
फलितो मे कामः ।

रावणः—(लक्ष्मणं विलोक्य) अयमपरः कः ।

---

च्यते । यत ईदृशं रूपं तासु त्रैलोक्यनिवासिनीषु न दृष्टम्, अत इयमेव त्रैलोक्यसुन्दरी । ईदृशमित्यन्तेन वाक्येन विस्मयहेतुप्रवर्णनात् तदनन्तरमहो ! इति विस्मयानुभावो दर्शित । चक्षुश्चिरात् सार्थकमित्यनेन परमानन्दानुभवो व्यज्यते । चक्षुरित्यनेकत्वमुद्देश्यगतत्वादविवक्षितम् । चक्षुरित्युद्देश्य सार्थकत्वस्य विधेयत्वादुद्देश्यस्य एकत्वमेव । चिरादिति ॥ जन्मत. प्रभृत्येवेदृशरूपादर्शनादुक्तम् । सार्थकत्वेऽपि दृष्टं तासु न रूपमीदृशमित्येतदेव हेतु ॥२०॥

सङ्कल्पेति ॥ अभिलाषानन्तरं कामिना सङ्कल्पो भवति । यथाह "नयनप्रीति प्रथमं चित्तासङ्गस्ततोऽथ सङ्कल्प ।" इति ।

चक्षुश्चिरादित्यनेनोक्तमेवार्थं सङ्कल्पविशेषत्वेन सोपस्कारमाह—पानादिति ॥ ममैव नेत्रपरम्परा । परम्पराशब्देन नेत्रबहुत्वस्यापि साकल्य सूचितम् । रूपरसायनस्य रूप सौन्दर्यं तदेव रसायनम् । रूपस्य रसायनत्वारोप पानौचित्यार्थं कृत । बहुधा पानात् प्रकारवचनस्यापि धाप्रत्ययस्य लक्षणयावृत्त्यर्थत्व द्रष्टव्यम् । बहुकृत्व पानान्मन सन्तर्पयन्ती । हेतौ शता । मनस्तृप्तिहेतुत्वात् फलवती जाता । सङ्कल्प प्रकारमेव दर्शयति—अस्या इति ॥ विंशतिमित्यनेन युगपत् कृत्स्नालिङ्गनसौकर्यं दर्शितम् । वीरव्रणाङ्कानित्यनेन वीरकामिन्य स्त्रिय इति न्यायेन सीताया आलिङ्गन प्रत्यानुकूल्य द्योत्यते । निर्वेदयामि सुखयिष्यामीत्यर्थ ॥२१॥

एव रावण सन्नातरमरचापलो भूत्वा सीताहरणे कालविलम्बमसहमानो रविदत्तजिज्ञासयान्यतो दत्तदृष्टि सन्नाहवन्त सौमित्रिं दृष्ट्वा महतीं शङ्कामवाप्य भगिनीं परिपृच्छति—अयमिति झटिति सामान्येन कृत प्रश्न । पुनर्विशेषनिर्धारणार्थम् अय कतम इति । रामो वा लक्ष्मणो वाऽन्य कश्चन तदीय• सहचरो वेति भाव ।

रावणः—(परावृत्यावलोक्य) अयं तपस्वी रामः । (इति मोह-
मुपगतः)

सूत—(आत्मगतम्) सत्यं मारीचवचः । रामो नाम,

न पुमान् पुण्डरीकाक्षो न च मुग्धेन्दुशेखरः ।
आविर्भूतमयोध्यायामेकं रक्षोघ्नमौषधम् ॥२३॥

इति ।

रावणः—(सूतं विलोक्य) सूत ! भीत इव त्वमाकारेण ।

सूत.—आयुष्मन् ! सत्यं भीत एवाहम् । सम्प्रति वयं मनुष्या.
रामो राक्षस इव ।

शूर्पणखा—अज्ज ! इअं से आइदि आहरणेण जोलदा कहं विअ
सोहदि ।

आर्य ! इयमस्या आकृतिराभरणेन ज्वलता कथमिव
शोभते ।

---

मारीचस्य वचनप्रकारं दर्शयति—**रामो नामेति** ॥ रामो नाम देवो नारायणो महेश्वरो वाऽवतीर्ण इति सर्वे वदन्ति । अह त्वन्यथा मन्ये, रामो न पुण्डरीकाक्ष आविर्भूतः मुग्धेन्दुशेखरश्च न । अयोध्यायामेकं मुख्य केनाप्यनिवार्यवीर्यं रक्षोघ्नमौषधमेवाविर्भूतम् । इह पारमार्थिकस्यापि देवत्वस्य निषेधेन रामस्य रक्षोघ्नौषधत्वसमर्थनं रावणहृदये सन्देहाभावमाविर्भावस्य तदेकप्रयोजनत्वमावेदयितुं कृतम् ॥२३॥

सम्प्रति वयमिति बहुवचनेन न केवलं मम भयं जायते किन्तु भवतोऽपीत्यभिप्रायो व्यज्यते । **रामो राक्षस इवेति** ॥ राक्षसान् दृष्ट्वा मनुष्याणां भयं दृष्टम् । अधुना तद्विपरीतम् । अतोऽस्मदपेक्षया रामस्य राक्षसत्वं तदपेक्षयास्माकं मनुष्यत्वमित्यर्थः । अथ शूर्पणखा रामस्य गम्भीरमहिमानं पश्यतो दशग्रीवस्य साध्वसमनुभावैरालक्ष्य सीताहरणाभिवृत्तिमाशङ्कमाना रामावलोकनात्तन्निवर्तयितुं सीतागतमनुरागं चोद्दीपयितुं सीतागतान्गुणाननुस्मारयति—**इयमिति** ॥ अस्या इयमाकृतिराभरणेन विनाप्यत्यन्तं शोभमाना पुनराभरणयोगेन कथमिव शोभते । अलङ्कृताया अस्याश्शोभा न परिच्छेत्तुं शक्यत इत्यर्थः ।

